असंगायाश्चितेर्बंधमोक्षौ भेदाग्रहान्मतौ ॥
बंधमुक्तिव्यवस्थार्थं पूर्वेषामिव चिद्भिदा ॥ १०० ॥

ननु चितोऽसंगत्वेन प्रकृतिपुरुषयोरत्यंतविविक्तत्वात् प्रकृतिप्रवृत्त्या कथं पुरुषस्य भोगापवर्गावित्याशंक्य तयोर्विवेकस्याग्रहणात्पुरुषे भोगापवर्गौ व्यवह्रियेते इत्याह । असंगाया इति।तार्किकादिभिरिव सांख्यैरात्माभेदोंऽगीक्रियते इत्याह।बंधमुक्तीति१००॥

महतः परमव्यक्तमिति प्रकृतिरुच्यते ॥
श्रुतावसंगता तद्वदसंगो हीत्यतः स्फुटा ॥ १ ॥

प्रकृतिसद्भावे पुरुषस्यासंगत्वे च श्रुतिमुदाहरति । महत इति ॥ १ ॥

चित्संनिधौ प्रवृत्तायाः प्रकृतेर्हि नियामकम् ॥
ईश्वरं ब्रुवते योगाः स जीवेभ्यः परः श्रुतः ॥ २ ॥

एवं जीवविषयां वादिविप्रतिपत्तिं प्रदर्श्येश्वरविषयां तां प्रदर्शयितुं ईश्वररूपं तावत्स्थापयति । चित्संनिधाविति । ननु प्रकृतिपुरुषातिरिक्तेश्वरकल्पनमप्रमाणमित्याशंक्याह । सजीवेभ्य इति ॥ २ ॥

प्रधानक्षेत्रज्ञपतिर्गुणेश इति हि श्रुतिः ॥
आरण्यकेऽसंभ्रमेण ह्यंतर्याम्युपपादितः ॥ ३ ॥

तामेवेश्वरसद्भावप्रतिपादिकां श्रुतिं पठति । प्रधानेति । प्रधानं गुणसाम्यावस्थारूपं क्षेत्रज्ञा जीवास्तेषां पतिः । गुणाः सत्त्वादयस्तेषामीशो नियामक इत्यर्थः । न केवलमियमेव श्रुतिरीश्वरप्रतिपादिका अंतर्यामिब्राह्मणमपीत्याह । आरण्यक इति ॥ ३ ॥

अत्रापि कलहायंते वादिनः स्वस्वयुक्तिभिः ॥
वाक्यान्यपि यथाप्रज्ञं दार्ढ्यायोदाहरंति हि ॥ ४ ॥

तामेव वादिविप्रतिपत्तिं प्रतिजानीते । अत्राऽपीति।प्रज्ञामनतिक्रम्य यथाप्रज्ञम् ॥४॥

क्लेशकर्मविपाकैस्तदाशयैरप्यसंयुतः ॥
पुंविशेषो भवेदीशो जीववत्सोऽप्यसंगचित् ॥ ५ ॥

इदानीं पतंजलिनोक्तमीश्वरप्रतिपादकं क्लेशकर्मविपाकैस्तदाशयैरपरामृष्टः पुरुषविशेष ईश्वर इत्येतत्सूत्रमर्थतः पठति । क्लेशेति । क्लेशा अविद्यादयः पंच कर्माणि कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषामिति सूत्रितानि सति मूले तद्विपाका जात्या-

शुभोगा इत्युक्ताः कर्मविपाकाःफलविशेषास्तदाशयास्तेषां संस्कारास्तैः क्लेशादिभिरसंस्पृष्टः पुरुषविशेष ईश्वरो भवति सोऽपि जीववदसंगश्चिद्रूपश्चेत्यर्थः ॥ ५ ॥

तथाऽपि पुंविशेषत्वाद्घटतेऽस्य नियंतृता ॥
अव्यवस्थौ बंधमोक्षावापतेतामिहान्यथा ॥ ६ ॥

नन्वसंगचिद्रूपत्वे कथं नियंतृत्वमित्यत आह तथाऽपीति । ईश्वरस्य नियंतृत्वानभ्युपगमे दोषमाह । अव्यवस्थाविति ॥ ६ ॥

भीषास्मादित्येवमादावसंगस्य परात्मनः ॥
श्रुतं तद्युक्तमप्यस्य क्लेशकर्माद्यसंगमात् ॥ ७ ॥

असंगस्येश्वरस्य नियंतृत्वं निष्प्रमाणकमित्याशंक्याह । भीषेति । तन्नियंतृत्वं श्रुतं ननु श्रुतमप्ययुक्तं कथमंगीक्रियते इत्यत आह । युक्तिमपीति । जीवधर्मस्य क्लेशादेरभावादुपपन्नं चेत्यर्थः ॥ ७ ॥

जीवानामप्यसंगत्वात् क्लेशादिर्न ह्यथाऽपि च ॥
विवेकाग्रहतः क्लेशकर्मादि प्रागुदीरितम् ॥ ८ ॥

ननु जीवा अप्यसंगचिद्रूपाः क्लेशादिरहिता एव तथाचेश्वरे को विशेष इत्याशंक्य जीवानां स्वतः क्लेशादिरहितत्वेऽपि बुद्ध्या सह विवेकाग्रहात् क्लेशादिरस्तीति पूर्वोक्तं स्मारयति जीवानामिति ॥ ८ ॥

नित्यज्ञानप्रयत्नेच्छा गुणानीशस्य मन्वते ॥
असंगस्य नियंतृत्वमयुक्तमिति तार्किकाः ॥ ९ ॥

तार्किकास्त्वसंगस्य नियामकत्वमसहमाना जीववैलक्षण्याय ज्ञानादिगुणत्रयं नित्यमंगीकुर्वते इत्याह नित्येति ॥ ९ ॥

पुंविशेषत्वमप्यस्य गुणैरेव न चान्यथा ॥
सत्यकामः सत्यसंकल्प इत्यादि श्रुतिर्जगौ ॥ १० ॥

नन्विच्छादिगुणकस्य तस्य कथं जीवाद्वैलक्षण्यमित्याशंक्य गुणानां नित्यत्वादेवेति परिहरति । पुंविशेषत्वमिति । गुणानां नित्यत्वे प्रमाणमाह । सत्येति ॥ १० ॥

नित्यज्ञानादिमत्वेऽस्य सृष्टिरेव सदा भवेत् ॥
हिरण्यगर्भ ईशोऽतो लिंगदेहेन संयुतः ॥ ११ ॥

तत्रापि दोषसद्भावात्पक्षांतरमाह । नित्येति । तस्य हिरण्यगर्भस्य किं रूपमित्यत आह । लिंगदेहेनेति । मायोपाधिकः परमात्मा लिंगशरीरसमष्ट्यभिमानेन हिरण्यगर्भ इत्युच्यते इत्यर्थः ॥ ११ ॥

उद्गीथब्राह्मणे तस्य माहात्म्यमतिविस्तृतम् ॥
लिंगसत्त्वेऽपि जीवत्वं नास्य कर्माद्यभावतः ॥ १२ ॥

हिरण्यगर्भस्येश्वरत्वे किं प्रमाणमित्यत आह । उद्गीथेति । ननु लिंगशरीरयोगे जीवः स्यादित्याशंक्य अविद्याकामकर्माभावान्न जीव इत्याह । लिंगसत्त्वेऽपीति ॥ १२ ॥

स्थूलदेहं विना लिंगदेहो न क्वापि दृश्यते ॥
वैराजो देह ईशोऽतः सर्वतो मस्तकादिमान् ॥ १३ ॥

केवलं लिंगशरीरस्य स्थूलदेहं विहायानुपलभ्यमानत्वात् स्थूलशरीरसमष्ट्यभिमानी विराडेवेश्वर इत्याह । स्थूलदेहं विनेति ॥ १३ ॥

सहस्रशीर्षेत्येवं च विश्वतश्चक्षुरित्यपि ॥
श्रुतमित्याहुरनिशं विश्वरूपस्य चिंतकाः ॥ १४ ॥

तत्सद्भावे प्रमाणमाह । सहस्रशीर्षेति । श्रुतं वाक्यमिति शेषः । विश्वरूपस्य चिंतकाः विराडुपासकाः ॥ १४ ॥

सर्वतः पाणिपादत्वे कृम्यादेरपि चेशता ॥
ततश्चतुर्मुखो देव एवेशो नेतरः पुमान् ॥ १५ ॥

अत्रापि दोषदृष्ट्या देवतांतरमालंबते इत्याह । सर्वत इति ॥ १५ ॥

पुत्रार्थं तमुपासीना एवमाहुः प्रजापतिः ॥
प्रजा असृजतेत्यादिश्रुतिं चोदाहरंत्यमी ॥ १६ ॥

एवं कैरुच्यते इत्यत आह । पुत्रार्थमिति । 'प्रजापतिः प्रजा असृजते 'त्यादि वाक्यं तत्र प्रमाणमित्याहुरित्याह । प्रजापतिरिति ॥ १६ ॥

विष्णोर्नाभेः समुद्भूतो वेधाः कमलजस्ततः ॥
विष्णुरेवेश इत्याहुर्लोके भागवता जनाः ॥ १७ ॥

भागवतमतमाह विष्णोरिति ॥ १७ ॥

शिवस्य पादावन्वेष्टुं शाङ्गर्यशक्तस्ततः शिवः ॥
ईशो न विष्णुरित्याहुः शैवा आगममानिनः ॥ १८ ॥

शैवानां मत माह । शिवस्येति ॥ १८ ॥

पुरत्रयं सादयितुं विघ्नेशं सोऽप्यपूजयत् ॥
विनायकं प्राहुरीशं गाणपत्यमते रताः ॥ १९ ॥

गाणपत्यमतमाह । पुरत्रयमिति ॥ १९ ॥

एवमन्ये स्वस्वपक्षाभिमानेनान्यथाऽन्यथा ॥
मंत्रार्थवादकल्पादीनाश्रित्य प्रतिपेदिरे ॥ २० ॥

उक्तन्यायमन्यत्राप्यतिदिशति । एवमिति । अन्ये भैरवमैरालाद्युपासकाः । अन्यथान्यथावर्णने कारणमाह।स्वस्वेति।तत्र तत्र प्रमाणानि संतीति दर्शयाति।मंत्रेति॥२०॥

अंतर्यामिणमारभ्य स्थावरांतेशवादिनः ॥
संत्यश्वत्थार्कवंशादेः कुलदैवतदर्शनात् ॥ २१ ॥

एवं कति मतानीत्याशंक्य असंख्यानीत्याह । अंतर्यामिणमिति । स्थावरेशवादो न क्वापि दृष्टचर इत्याशंक्याह । अश्वत्थार्केति ॥ २१ ॥

तत्त्वनिश्चयकामेन न्यायागमविचारिणाम् ॥
एकैव प्रतिपत्तिः स्यात् साऽप्यत्र स्फुटमुच्यते ॥ २२ ॥

नन्वेवं मतभेदे कस्योपादेयत्वं कस्य वा हेयत्वमित्याकांक्षायामाह । तत्त्वनिश्चयेति।तत्त्वनिश्चयकामेन तत्त्वनिश्चयेच्छया न्यायागमयोर्विचारणशीलानां पुरुषाणां प्रतिपत्तिरेकैव स्यात् सा कीदृशीत्यत आह । साऽप्यत्रेति ॥ २२ ॥

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ २३ ॥

तामेव प्रतिपत्तिं दर्शयितुं तदनुकूलां श्रुतिं पठति । मायांत्विति । मायामेव प्रकृतिं जगदुपादानकारणं विद्यात् जानीयात् । मायिनं तु मायोपाधिकमंतर्यामिणमेव महेश्वरं मायाधिष्ठातारं निमित्तकारणं जानीयात् । अस्य मायिनो महेश्वरस्यावयवभूतैरंशरूपैश्वरात्मकैर्जीवैः कृत्स्नमिदं जगद्व्याप्तमित्यस्याः श्रुतेरर्थः ॥ २३ ॥

इति श्रुत्यनुसारेण न्याय्यो निर्णय ईश्वरे ॥
तथा सत्यविरोधः स्यात्स्थावरांते शवादिनाम् ॥ २४ ॥

एतच्छ्रुत्यनुसारेणेश्वरविषयो निर्णयो युक्त इत्याह । इतीति । कुतो युक्त इत्याशंक्य सर्वत्राविरुद्धत्वादित्याह । तथेति । सर्वस्यापीश्वरत्वाभ्युपगमान्न केनापि विरोध इति भावः ॥ २४ ॥

माया चेयं तमोरूपा तापनीये तदीरणात् ॥
अनुभूतिं तत्र मानं प्रतिजज्ञे श्रुतिः स्वयम् ॥ २५ ॥

ननु जगत्प्रकृतिभूतायाः मायायाः किं रूपमित्यत आह । माया चेयमिति । कुत इत्यत आह । तापनीय इति । माया च तमोरूपेति तापनीयोपनिषदि तमोरुपनिषदि तमोरुपत्वस्याभिधानादित्यर्थः । मायायास्तमोरूपत्वे किं प्रमाणमित्याकांक्षायां अनुभूतेरिति श्रुतिरेवात्रानुभवः प्रमाणमिति प्रतिजानीते इत्याह।अनुभूतिमिति॥२५॥

जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः ॥
आबालगोपं स्पष्टत्वादानंत्यं तस्य साऽब्रवीत् ॥ २६ ॥

तत्र मायायास्तमोरूपत्वे कोऽसावनुभव इत्याकांक्षायां तदेतज्जडं मोहात्मकमिति श्रुतिरेवात्रानुभवं स्पष्टयतीत्याह । जडमिति । अनंतमिति श्रुत्या सर्वानुभवसिद्धत्वमुच्यते इत्याह । आबालेति । जडं मोहं च प्रकृतेः कार्यं इति आबालगोपालादीनां सर्वेषामनुभव इत्यर्थः ॥ २६ ॥

अचिदात्मघटादीनां यत्स्वरूपं जडं हि तत् ॥
यत्र कुंठीभवेद्बुद्धिः स मोह इति लौकिकाः ॥ २७ ॥

जडशब्दस्यार्थमाह । अचिदात्मेति । मोहशब्दार्थमाह । यत्रेति ॥ २७ ॥

इत्थं लौकिकदृष्ट्यैतत्सर्वैरप्यनुभूयते ॥
युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः ॥ २८ ॥

उक्तप्रकारेण सर्वानुभवसिद्धत्वलक्षणमानंत्यं सिद्धमित्याह । इत्थमिति । एतज्जाड्यमोहलक्षणतमोरूपत्वं । नन्वेवं मायायाः सर्वानुभवसिद्धत्वे घटादिवत् ज्ञानेनानिवर्त्यत्वं स्यादित्याशंक्याह । युक्तीति । तुशब्दः शंकाव्यावृत्त्यर्थः अनिर्वाच्यं सत्त्वेनासत्त्वेन वा निर्वक्तुमशक्यं तत्र किं प्रमाणमित्यत आह । नासदिति ॥ २८ ॥

नासदासीद्विभातत्वान्नो सदासीच्च बाधनात् ॥
विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः ॥ २९ ॥

अस्याः श्रुतेरभिप्रायमाह । नासदासीदिति । 'बाधनान्नेह नानास्ति किंचने'-ति श्रुत्य निषेधादित्यर्थः । सदसद्रूपत्वं तु विरुद्धत्वादयुक्तमिति श्रुत्योपेक्षितं एवं युक्तिदृष्ट्याऽनिर्वचनीयत्वं प्रदर्श्य 'तुच्छमिदं रूपमस्ये' ति श्रुतिर्विद्वदनुभवेन तस्यास्तुच्छत्वं दर्शयतीत्याह । विद्येति । तुच्छत्वे हेतुमाह । तस्येति ॥ २९ ॥

तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ॥
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥ ३० ॥

उपपादितमर्थमुपसंहरति । तुच्छेति । श्रौतबोधेन तुच्छा कालत्रयेऽप्यसती यौक्तिकबोधेनानिर्वचनीया लौकिकबोधेन वास्तवी चेत्येवं त्रिधा माया ज्ञेयेत्यर्थः॥ ३०॥

अस्य सत्त्वमसत्त्वं च जगतो दर्शयत्यसौ ॥
प्रसारणाच्च संकोचाद्यथा चित्रपटस्तथा ॥ ३१ ॥

अस्य सत्त्वमसत्त्वं च दर्शयतीति श्रुतेरर्थमस्याः कृत्यमाह । अस्येति । एकस्या एव मायाया जगत्सत्त्वासत्त्वप्रदर्शकत्वे दृष्टांतमाह । प्रसारणादिति ॥ ३१ ॥

अस्वतंत्रा हि माया स्यादप्रतीतेर्विना चितिम् ॥
स्वतंत्राऽपि तथैव स्यादसंगस्यान्यथाकृतेः ॥ ३२ ॥

स्वतंत्रास्वतंत्रत्वेनेति श्रुत्या मायायाः स्वातंत्र्यास्वातंत्र्ये दर्शिते तत्रोभयत्रोपपत्तिमाह । अस्वतंत्रेति । स्वभासकचैतन्यं विहाय न प्रकाशते इत्यस्वतंत्राऽसंगस्यात्मनोऽन्यथाकरणात् स्वतंत्राऽपीत्यर्थः ॥ ३२ ॥

कूटस्थासंगमात्मानं जगत्त्वेन करोति सा ॥
चिदाभासस्वरूपेण जीवेशावपि निर्ममे ॥ ३३ ॥

अन्यथाकरणमेव स्पष्टयति । कूटस्थासंगमिति । जीवेशावाभासेन करोतीति श्रुत्युक्तं जीवेश्वरविभागं च करोतीत्याह चिदाभासेति ॥ ३३ ॥

कूटस्थमनुपद्रुत्य करोति जगदादिकम् ॥
दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः ॥ ३४ ॥

नन्वात्मनोऽन्यथाकरणे कूटस्थत्वहानिः स्यादित्याशंक्याह । कूटस्थमिति । ननु

कूटस्थत्वाविघातेन जगदादिस्वरूपत्वापादनंदुर्घटमित्याशंक्य मायायां दुर्घटैकविधायित्वान्नेदमाश्चर्यकारणमित्याह । दुर्घटेति।अन्यथा मायात्वमेव भज्येतेति भावः॥ ३४॥

द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि ॥
मायाया दुर्घटत्वं च स्वतः सिध्यति नान्यतः ॥ ३५ ॥

मायाया दुर्घटकारित्वस्वभावत्वे दृष्टांतमाह । द्रवत्वमिति । उदकादीनां द्रवत्वादि यथा स्वाभाविकं तद्वन्मायाया दुर्घटकारित्वमित्यर्थः ॥ ३५ ॥

न वेत्ति लोको यावत्तां साक्षात्तावच्चमत्कृतिम् ॥
धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति ॥ ३६ ॥

ननु मायाया दुर्घटकारित्वमाश्चर्यकारणं न भवतीति उक्तं अनुपपन्नं लोके मायायाश्चमत्कारहेतुत्वदर्शनादित्याशंक्य मायायाः प्रयोक्तृत्वसाक्षात्कारपर्यंतमेवास्या आश्चर्यकारणत्वं नोपरिष्टादित्याह । नवेत्तीति ॥ ३६ ॥

प्रसरंति हि चोद्यानि जगद्वस्तुत्ववादिषु ॥
न चोदनीयं मायायां तस्याश्चोद्यैकरूपतः ॥ ३७ ॥

किंच जगत्सत्यत्ववादिनो नैयायिकादीन् प्रत्येवंविधानि चोद्यानि कर्तव्यानि न मायावादिनं प्रति इत्याह । प्रसरंतीति ॥ ३७ ॥

चोद्येऽपि यदि चोद्यं स्यात् त्वच्चोद्ये चोद्यते मया ॥
परिहार्यं ततश्चोद्यं न पुनः प्रतिचोद्यताम् ॥ ३८ ॥

मायावादिनं प्रति चोद्यकरणेऽतिप्रसंगमाह । चोद्येऽपीति । तर्हि किंकर्तव्यमित्यत आह । परिहार्यमिति ॥ ३८ ॥

विस्मयैकशरीराया मायायाश्चोद्यरूपतः ॥
अन्वेष्यः परिहारोऽस्या बुद्धिमद्भिः प्रयत्नतः ॥ ३९ ॥

उक्तमेवार्थं प्रपंचयति । विस्मयेति ॥ २९ ॥

मायात्वमेव निश्चेयमिति चेत्तर्हि निश्चिनु ॥
लोकप्रसिद्धमायाया लक्षणं यत्तदीक्ष्यताम् ॥ ४० ॥

मायात्वनिश्चये तत्परिहारान्वेषणमुचितं स एव नेदानीं सिद्धइति शंकते । मायात्वमिति । मायालक्षणसद्भावान्मायात्वं निश्चीयतामित्यभिप्रायेणाह । तर्हीति । किं लक्षणमित्यत आह । लोकेति ॥ ४० ॥

न निरूपयितुं शक्या विस्पष्टं भासते च या ॥
सा मायेतींद्रजालादौ लोकाः संप्रतिपेदिरे ॥ ४१ ॥

तस्या अपि किं लक्षणमित्यत आह । न निरूपयितुमिति ॥ ४१ ॥

स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम् ॥
मायामयं जगत्तस्मादीक्षस्वापक्षपाततः ॥ ४२ ॥

दृष्टांते सिद्धं लक्षणं दार्ष्टांतिके योजयति स्पष्टमिति ॥ ४२ ॥

निरूपयितुमारब्धे निखिलैरपि पंडितैः ॥
अज्ञानं पुरतस्तेषां भाति कक्षासु कासुचित् ॥ ४३ ॥

जगतोऽशक्यनिरूपणत्वं कथमित्याशंक्य तद्दर्शयति निरूपयितुमिति ॥ ४३ ॥

देहेंद्रियादयो भावा वीर्येणोत्पादिताः कथम् ॥
कथं वा तत्र चैतन्यमित्युक्ते ते किमुत्तरम् ॥ ४४ ॥

अशक्यनिरूपणत्वमेवोदाहरणेन स्पष्टयति । देहेन्द्रियादय इति ॥ ४४ ॥

वीर्यस्यैष स्वभावश्चेत्कथं तद्विदितं त्वया ॥
अन्वयव्यतिरेकौ यौ भग्नौ तौ वंध्यवीर्यतः ॥ ४५ ॥

स्वभाववादी शंकते । वीर्यस्येति । सिद्धांती पृच्छति । कथं तदिति । अन्वयव्यतिरेकाभ्यां जानामीत्याशंक्य व्याप्त्यभावान्नैवमित्याह । अन्वयेति । वंध्यवीर्यतः वंध्यायां च तत्र वीर्यस्य व्यर्थत्वात् व्याप्तिर्न घटते यत्र वीर्यं तत्र तत्र देहादिकं इति न अन्वयोऽपि ॥ ४५ ॥

न जानामि किमप्येतदित्यंते शरणं तव ॥
अत एव महांतोऽस्य प्रवदंतींद्रजालताम् ॥ ४६ ॥

एवं पुनः पुनः पृष्टे सति किमपि न जानामीत्येवोत्तरं देयमिति फलितमाह । न जानामीति ॥ ४६ ॥

एतस्मात्किमिवेंद्रजालमपरं यद्गर्भवासस्थितं
रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानांकुरम् ॥

पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं
पश्यत्यत्तिशृणोति जिघ्रति तथा गच्छत्यथागच्छति ॥४७॥

उक्तानिर्वचनीयत्वे वृद्धसंमतिं दर्शयति । एतस्मादिति ॥ ४७ ॥

देहवद्वटधानादौ सुविचार्य विलोक्यताम् ॥
क्व धाना कुत्र वा वृक्षस्तस्मान्मायेति निश्चिनु ॥ ४८ ॥

न केवलं देहस्यैव दुर्निरूपत्वं किंतु वटवृक्षादेरपीत्याह । देहवदिति ॥ ४८ ॥

निरुक्तावभिमानं ये दधते तार्किकादयः ॥
हर्षमिश्रादिभिस्ते तु खंडनादौ सुशिक्षिताः ॥ ४९ ॥

नन्वस्माभिर्निर्वक्तुमशक्यत्वेऽपि उदयनादिभिराचार्यैर्निरुच्यते इत्याशंक्याह । निरुक्ताविति ॥ ४९ ॥

अचिंत्या खलु ये भावा न तांस्तर्केषु योजयेत् ॥
अचिंत्यरचनारूपं मनसाऽपि जगत्खलु ॥ ५० ॥

उक्तार्थे सांप्रदायिकानां वाक्यं संवादयति । अचिंत्या इति ॥ ५० ॥

अचिंत्यरचनाशक्तिबीजं मायेति निश्चिनु ॥
मायाबीजं तदेवैकं सुषुप्तावनुभूयते ॥ ५१ ॥

ननु भवत्त्वेवं जगतोऽचिंत्यरचनात्वं मायायां किमायातमित्यत आह । अचिंत्यरचनेति । अचिंत्यरचनाशक्तिमत् यद्बीजं कारणं सैव मायेत्यर्थः । नन्वेवंविधं कारणं क्व दृष्टमित्यत आह मायेति ॥ ५१ ॥

जाग्रत्स्वप्नजगत्तत्र लीनं बीज इव द्रुमः ॥
तस्मादशेषजगतो वासनास्तत्र संस्थिताः ॥ ५२ ॥

कथं तस्य जगद्बीजत्वमित्यत आह । जाग्रदिति । ततः किमित्यत आह । तस्मादिति । यतो जगत्कारणं मायाऽतोऽशेषजगद्वासनास्तत्र मायायां तिष्ठंतीत्यर्थः ॥५२॥

या बुद्धिवासनास्तासु चैतन्यं प्रतिबिंबति ॥
मेघाकाशवदस्पष्टचिदाभासोऽनुमीयताम् ॥ ५३ ॥

ततोऽपि किं तत्राह । या बुद्धीति । ननु तासु प्रतिबिंबोऽस्ति चेत्कुतो नानुभूयते इत्याशंक्यास्पष्टत्वादित्याह । मेघेति । तर्हि कुतस्तत्सिद्धिरित्यत आह । अनुमीयतामिति ॥ ५३ ॥

साभासमेव तद्बीजं धीरूपेण प्ररोहति ॥
अतो बुद्धौ चिदाभासो विस्पष्टं प्रतिभासते ॥ ५४ ॥

ननु मेघांशोदकस्यास्पष्टाकाशप्रतिबिंबवत्त्वेऽपि तज्जातीयस्य घटोदकस्य स्पष्टाकाशप्रतिबिंबवतः सद्भावान्मेघाकाशानुमानं घटते । इह तथाविधदृष्टांताभावात्कथमनुमानोदय इत्याशंक्यात्रापि तथाविधदृष्टांतसंपादनाय आह । साभासमिति । चिदाभासविशिष्टं तदेवाज्ञानं बुद्धिरूपेण परिणममानं विस्पष्टचिदाभासवद्भवतीति भावः । एवं चेदनुमानमत्र सूचितं भवति विमता बुद्धिवासनाश्चित्प्रतिबिंबवत्यो भवितुमर्हंति बुद्ध्यवस्थाविशेषत्वात् बुद्धिवृत्तिवदिति ॥ ५४ ॥

माया भासेन जीवेशौ करोतीति श्रुतौ श्रुतम् ॥
मेघाकाशजलाकाशाविव तौ सुव्यवस्थितौ ॥ ५५ ॥

एवं जीवेश्वरयोर्मायिकत्वं श्रुत्युक्तमुपपादितमुपसंहरति । मायाभासेनेति । ननु जीवेशयोर्मायिकत्वे समाने कथमवांतरभेदसिद्धिरित्याशंक्यास्पष्टस्पष्टोपाधिमत्त्वेन मेघाकाशजलाकशयोरिव तत्सिद्धिरित्याह । मेघाकाशेति ॥ ५५ ॥

मेघवद्वर्तते माया मेघस्थिततुषारवत् ॥
धीवासनाश्चिदाभासस्तुषारस्थखवत्स्थितः ॥ ५६ ॥

ईशस्य मेघाकाशसाम्यं स्फुटीकरोति । मेघवदिति ॥ ५६ ॥

मायाधीनश्चिदाभासः श्रुतो मायी महेश्वरः ॥
अंतर्यामी च सर्वज्ञो जगद्योनिः स एव हि ॥ ५७ ॥

मायाप्रतिबिंबस्येश्वरत्वे किं प्रमाणमित्याशंक्य श्रुतिरेवेत्याह । मायाधीनइति । नकेवलमीश्वरत्वमस्य श्रुतं अपि त्वंतर्यामित्वादिकमपि धर्मजातं श्रुतमस्तीत्याह अंतर्यामीति ॥ ५७ ॥

सौषुप्तमानंदमयं प्रक्रम्यैवं श्रुतिर्जगौ ॥
एष सर्वेश्वर इति सोऽयं वेदोक्त ईश्वरः ॥ ५८ ॥

ननु धीवासनाप्रतिबिंबस्येश्वरत्वादिकं कथं श्रुतिसिद्धं इत्याशंक्य तदुपपादिकां श्रुतिं दर्शयति । सौषुप्तमिति । सुषुप्तस्थाने एकीभूतः प्रज्ञानघन एवेत्यादिका श्रुतिः धीवासनाप्रतिबिंबरूपस्यानंदमयस्येश्वरत्वादिकं प्रतिपादयतीत्यर्थः ॥ ५८ ॥

सर्वज्ञत्वादिके तस्य नैव विप्रतिपद्यताम् ॥
श्रौतार्थस्यावितर्क्यत्वान्मायायां सर्वसंभवात् ॥ ५९ ॥

नन्वानंदमयस्य सर्वज्ञत्वादिकं अनुभवविरुद्धमित्याशंक्याह । सर्वज्ञत्वादिकइति । कुत इत्यत आह । श्रौतेति । इतोऽपि न विप्रतिपत्तिः कार्येत्याह । मायाया-मिति ॥ ५९ ॥

अयं यत्सृजते विश्वं तदन्यथयितुं पुमान् ॥
न कोऽपि शक्तस्तेनायं सर्वेश्वर इतीरितः ॥ ६० ॥

नन्वनुकूलयुक्त्यभावे श्रुतिरपि ग्रावप्लववाक्यवदर्थवादः स्यादित्याशंक्य श्रुतिप्रा-माण्यसिद्ध्ये सर्वेश्वरत्वादिकमुपपादयति। अयमिति।अयमानंदमयो यज्जाग्रदादि विश्वं सृजति तत्र केनाप्यन्यथाकर्तुं शक्यते अतोऽयं सर्वेश्वर इत्यर्थः ॥ ६० ॥

अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः ॥
ताभिः क्रोडीकृतं सर्वं तेन सर्वज्ञ ईरितः ॥ ६१ ॥

इदानीं सर्वज्ञत्वमुपपादयति । अशेषेति । तत्र सौषुप्तेऽज्ञाने कारणभूते कार्यभूतानां सर्वप्राणिबुद्धीनां वासना निवसंति ताभिश्च वासनाभिः सर्वं जगत् क्रोडीकृतं विषयी-कृतं तेन सर्वबुद्धिवासनावदज्ञानोपाधिकत्वेन सर्वज्ञ उच्यते इत्यर्थः ॥ ६१ ॥

वासनानां परोक्षत्वात्सर्वज्ञत्वं न हीक्ष्यते ॥
सर्वबुद्धिषु तद्दृष्ट्वा वासनास्वनुमीयताम् ॥ ६२ ॥

ननु यदि सर्वज्ञत्वमस्ति तर्हि तत् कुतो नानुभूयते इत्याशंक्य तदुपाधीनां वास-नानां परोक्षत्वान्नानुभव इत्याह । वासनानामिति । कथं तर्हि तदवगम इत्याशंक्याह। सर्वबुद्धिष्विति । सर्वबुद्धिनिष्ठं सर्वज्ञत्वं स्वकारणभूतवासनागतसर्वज्ञत्वपुरःसरं भवितु-मर्हति कार्यनिष्ठधर्मविशेषत्वात्पटगतरूपादिवदित्यर्थः ॥ ६२ ॥

विज्ञानमयमुख्येषु कोशेष्वन्यत्र चैव हि ॥
अंतास्तिष्ठन् यमयति तेनांतर्यामितां व्रजेत् ॥ ६३ ॥

सर्वज्ञत्वमुपपाद्यैषोंऽतर्यामीति श्रुत्युक्तमंतर्यामित्वमुपपादयति । विज्ञानेति । अन्यत्र पृथिव्यादौ तिष्ठन् यमयति यतस्तेनेत्यन्वयः ॥ ६३ ॥

बुद्धौ तिष्ठन्नांतरोऽस्याधियानीक्ष्यश्च धीवपुः ॥
धियमंतर्यमयतीत्येवं वेदेन घोषितम् ॥ ६४ ॥

अस्मिन्नर्थेंऽतर्यामिब्राह्मणं कृत्स्नं प्रमाणमिति दर्शयितुं तदेकदेशभूतं ' यो विज्ञाने तिष्ठन्नि ' त्यादिवाक्यमर्थतोऽनुक्रामति । बुद्धाविति ॥ ६४ ॥

तंतुः पटे स्थितो यद्वदुपादानतया तथा ॥
सर्वोपादानरूपत्वात् सर्वत्रायमवस्थितः ॥ ६५ ॥

इदानीमंतर्यामिब्राह्मणस्य प्रतिपर्यायव्याख्याने ग्रंथबाहुल्यभयाद्व्याख्यानस्य सर्वपर्यायसंचारित्वसिद्धये यः सर्वेषु भूतेष्विति पर्यायं व्याचक्षाणो ' यः सर्वेषु तिष्ठन्नि ' त्यस्यार्थं दृष्टांतेनाह । तंतुरिति ॥ ६५ ॥

पटादप्यांतरस्तंतुस्तंतोरप्यंशुरांतरः ॥
आंतरत्वस्य विश्रांतिर्यत्रासावनुमीयताम् ॥ ६६ ॥

ननूपादानतया सर्वत्रायमवस्थितश्चेत् किमिति सर्वत्र नोपलभ्येतेत्याशंक्य सर्वांतरत्वादित्याह । पटादपीति । अत्रेदमनुमानं आंतरत्वतारतम्यं क्वचिद्विश्रांतं तारतम्यत्वादणुत्वतारतम्यवदिति ॥ ६६ ॥

द्वित्रांतरत्वकक्षाणां दर्शनेऽप्ययमांतरः ॥
न वीक्ष्यते ततो युक्तिश्रुतिभ्यामेव निर्णयः ॥ ६७ ॥

नन्वांतरत्वेऽप्यंश्वादिवदंतर्यामिणो दर्शनं किं न स्यादित्याशंक्य तेषामिव बाह्यत्वाभावान्न दृश्यते इत्यभिप्रायेणाह । द्वित्रान्तरत्वेति । कुतस्तर्हि तन्निर्णय इत्यत आह । ततइति।अचेतनस्य चेतनाधिष्ठानमंतरेण प्रवृत्त्यनुपपत्तिर्युक्तिः। श्रुतिस्तूदाहृतैव ॥ ६७॥

पटरूपेण संस्थानात् पटस्तंतोर्वपुर्यथा ॥
सर्वरूपेण संस्थानात्सर्वमस्य वपुस्तथा ॥ ६८ ॥

' यस्य सर्वाणि भूतानि शरीरमि 'त्यस्यार्थमाह । पटरूपेणेति । पटरूपेणावस्थितस्य तंतोः पटः शरीरं यथा एवं सर्वरूपेणावस्थितस्य सर्वशरीरमित्यर्थः ॥६८॥

तंतोः संकोचविस्तारचलनादौ पटस्तथा ॥
अवश्यमेव भवति न स्वातंत्र्यं पटे मनाक् ॥ ६९ ॥

'यः सर्वाणि भूतान्यांतरो यमयती ' तिवाक्यस्य तात्पर्यं सदृष्टांतमाह श्लोकद्वयेन । तंतोरिति ॥ ६९ ॥

तथांतर्याम्ययं यत्र यया वासनया यथा ॥
विक्रियेत तथाऽवश्यं भवत्येव न संशयः ॥ ७० ॥

तंतुसंकोचादिना पटसंकोचादिर्यथा भवति एवं पृथिव्यादिषूपादानत्वेन स्थितोंऽतर्यामी यथायथा वासनया यथा घटादिकार्यरूपेण विक्रियेत तथा तत्कार्यजातमवश्यं भवतीति भावः ॥ ७० ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥
भ्रामयन्त्सर्वभूतानि यंत्रारूढानि मायया ॥ ७१ ॥

एवमंतर्यामिप्रतिपादिकां श्रुतिमुपन्यस्य स्मृतिमप्युपन्यस्यति । ईश्वर इति ॥७१॥

सर्वभूतानि विज्ञानमयास्ते हृदये स्थिताः ॥
तदुपादानभूतेशस्तत्र विक्रियते खलु ॥ ७२ ॥

सर्वभूतानामिति पदस्यार्थमाह ।सर्वभूतानीति । तेच हृदयपुंडरीके स्थिताः । ननु तेषां कुतो हृद्यवस्थानमित्याशंक्य हृद्यंतर्यामिणो विज्ञानमयाकारेण परिणामादित्याह । तदुपादानेति ॥७२॥

देहादि पंजरं यंत्रं तदारोहोऽभिमानिता ॥
विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत् ॥ ७३ ॥

यंत्रारूढानीत्यत्र यंत्रारोहशब्दयोरर्थमाह । देहादीति । भ्रामयन्निति पदे प्रकृत्यर्थमाह । विहितेति ॥ ७३ ॥

विज्ञानमयरूपेण तत्प्रवृत्तिस्वरूपतः ॥
स्वशक्त्येशो विक्रियते मायया भ्रामणं हि तत् ॥ ७४ ॥

इदानीं णिच्प्रत्ययमायापदयोरर्थमाह विज्ञानमयेति ॥ ७४ ॥

अंतर्यमयतीत्युक्त्याऽयमेवार्थः श्रुतौ श्रुतः ॥
पृथिव्यादिषु सर्वत्र न्यायोऽयं योज्यतां धिया ॥ ७५ ॥

श्रौतस्य यमयतीतिपदस्याप्ययमेवार्थ इत्याह । अंतर्यमयतीति । उक्तव्याख्यानं पर्यायांतरेष्वतिदिशति पृथिव्यादिष्विति ॥ ७५ ॥

जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ॥
केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥

प्रवृत्तिजातस्य सर्वेश्वराधीनत्वे वचनांतरमुदाहरति । जानामिधर्ममिति ॥ ७६ ॥

नार्थः पुरुषकारेणेत्येव मा शंक्यतां यतः ॥
ईशः पुरुषकारस्य रूपेणापि विवर्तते ॥ ७७ ॥

ननु प्रवृत्तेरीश्वराधीनत्वे पुरुषप्रयत्नो व्यर्थः स्यादित्याशंक्य पुरुषप्रयत्नस्यापीश्वररूपत्वान्मैवमिति परिहरति । नार्थइति । अर्थः प्रयोजनं । पुरुषकारः पुरुषप्रयत्नः ॥ ७७ ॥

ईदृग्बोधेनेश्वरस्य प्रवृत्तिर्मैव वार्यताम् ॥
तथाऽपीशस्य बोधेन स्वात्मासंगत्वधीजनिः ॥ ७८ ॥

ननु पुरुषप्रयत्नस्यापीश्वररूपत्वे यमयति भ्रामयतीति प्रतिपादितमंतर्यामिप्रेरणं वृथा स्यादित्याशंक्य तद्बोधेन स्वात्मासंगत्वज्ञानलक्षणफलस्य सत्वान्मैवमिति परिहरति । ईदृगिति । ईदृग्बोधेनेशस्य पुरुषकारादिरूपेणाप्यवस्थानज्ञानेन प्रवृत्तिः अंतर्यामिरूपेण प्रेरणा ॥ ७८ ॥

तावता मुक्तिरित्याहुः श्रुतयः स्मृतयस्तथा ॥
श्रुतिस्मृती ममैवाज्ञे इत्यपीश्वरभाषितम् ॥ ७९ ॥

आत्मनोऽसंगत्वज्ञानेनापि किं प्रयोजनमित्यत आह । तावतेति । श्रुतिस्मृत्युदितस्यानतिलंघनीयत्वे स्मृतिं दर्शयति । श्रुतिस्मृती इति ॥ ७९ ॥

आज्ञया भीतिहेतुत्वं भीषास्मादिति हि श्रुतम् ॥
सर्वेश्वरत्वमेतत्स्यादंतर्यामित्वतः पृथक् ॥ ८० ॥

श्रुत्याऽपीश्वरस्य भीतिहेतुत्वमुक्तमित्याह । आज्ञयाइति । ईश्वरस्य भीतिहेतुत्वं किमर्थमुक्तमित्याशंक्य सर्वेश्वरत्वस्यांतर्यामित्वतः पार्थक्यसिद्ध्ये इति मत्वाऽऽह । सर्वेश्वरेति ॥ ८० ॥

एतस्य वा अक्षरस्य प्रशासन इति श्रुतिः ॥
अंतः प्रविष्टः शास्ताऽयं जनानामिति च श्रुतिः ॥ ८१ ॥

बहिरंतश्चेश्वर एव नियामक इत्यत्र श्रुतिद्वयमाह । एतस्येति ॥ ८१ ॥

जगद्योनिर्भवेदेष प्रभवाप्ययकृत्त्वतः ॥
आविर्भावतिरोभावावुत्पत्तिप्रलयौ मतौ ॥ ८२ ॥

क्रमप्राप्तस्यैष योनिरित्यर्थमाह। जगद्योनिरिति। 'प्रतिज्ञातार्थे प्रभवाप्ययौ हि भूतानामि'ति वाक्यं हेतुत्वेन योजयति। प्रभवेति। प्रभवाप्ययावुत्पत्तिप्रलयौ तत्कर्तृत्वात् जगद्योनिरित्यर्थः। उत्पत्तिप्रलयशब्दयोर्विवक्षितमर्थमाह। आविर्भावेति। उत्पत्तिप्रलयावाविर्भावतिरोभावौ मताविति योजना ॥ ८२ ॥

आविर्भावयति स्वस्मिन् विलीनं सकलं जगत् ॥
प्राणिकर्मवशादेष पटो यद्वत्प्रसारितः ॥ ८३ ॥

आविर्भावकारित्वं सदृष्टांतमुपपादयति आविर्भावयतीति। यथा संकुचितश्चित्रपटः स्वस्य प्रसारणेन स्वनिष्ठानि चित्राण्याविर्भावयति एवमीशोऽपीत्यर्थः ॥ ८३ ॥

पुनस्तिरोभावयति स्वात्मन्येवाखिलं जगत् ॥
प्राणिकर्मक्षयवशात्संकोचितपटो यथा ॥ ८४ ॥

तस्यैव प्रलयकारणत्वं दर्शयति। पुनरिति। स एव पटः संकुचितः चित्राणि यथा तिरोभावयति तद्वदित्यर्थः ॥ ८४ ॥

रात्रिघस्रौ सुप्तिबोधावुन्मीलननिमीलने ॥
तूष्णींभावमनोराज्ये इव सृष्टिलयाविमौ ॥ ८५ ॥

आविर्भावतिरोभावयोर्दृष्टांतांतराणि दर्शयति। रात्रिघस्राविति घस्रोऽहः ॥ ८५ ॥

आविर्भावतिरोभावशक्तिमत्त्वेन हेतुना ॥
आरंभपरिणामादिचोद्यानां नात्र संभवः ॥ ८६ ॥

नन्वीश्वरस्य जगद्योनित्वं किं आरंभकत्वेन किंवा तदाकारपरिणामित्वेन नाद्यः अद्वितीयस्यारंभकत्वायोगात् न द्वितीयः निरवयवस्य परिणामासंभवादित्याशंक्य विवर्तवादाश्रयणान्नायं दोष इति परिहरति। आविर्भावेति ॥ ८६ ॥

अचेतनानां हेतुः स्याज्जाड्यांशे नेश्वरस्तथा ॥
चिदाभासांशतस्त्वेष जीवानां कारणं भवेत् ॥ ८७ ॥

नन्वेक एवेश्वरः कथं चेतनाचेतनजगदुपादानं भविष्यतीत्याशंक्य उपाधिप्राधान्येनाचेतनोपादानं चित्प्राधान्येन चेतनोपादानं च भविष्यतीत्याह। अचेतनानामिति ॥ ८७ ॥

तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् ॥
परः कारणतामेति भावनाज्ञानकर्मभिः ॥ ८८ ॥
इति वार्तिककारेण जडचेतनहेतुता ॥
परमात्मन एवोक्ता नेश्वरस्येति चेच्छृणु ॥ ८९ ॥

ननु मायाविन ईश्वरस्य जगत्कारणत्वप्रतिपादनमनुपपन्नं सुरेश्वराचार्यैः परमात्मन एव तदभिधानादिति शंकते द्वाभ्यां । तमःप्रधान इति । तमःप्रधानः तमोगुणप्रधानमायोपाधिकः क्षेत्राणां शरीरादीनां भावनाज्ञानकर्मभिः भावनासंस्कारः ज्ञानं देवतायानादिकर्म पुण्यापुण्यलक्षणं तैर्निमित्तभूतैरित्यर्थः ॥ ८८ ॥ ८९ ॥

अन्योन्याध्यासमत्रापि जीवकूटस्थयोरिव ॥
ईश्वरब्रह्मणोः सिद्धं कृत्वा ब्रूते सुरेश्वरः ॥ ९० ॥

त्वंपदार्थइव तत्पदार्थेऽप्यधिष्ठानारोपयोरन्योन्याध्यासस्य विवक्षितत्वान्नैवमिति । परिहरति । अन्योन्याध्यासमिति ॥ ९० ॥

सत्यं ज्ञानमनंतं यद्ब्रह्म तस्मात्समुत्थिताः ॥
खंवाय्वग्निजलोर्व्योषध्यन्नदेहाइति श्रुतिः ॥ ९१ ॥

ननु सुरेश्वराचार्यैरीश्वरब्रह्मणोरन्योन्याध्यासः सिद्धवत्कृत्य व्यवहृत इति कुतोऽवगम्यते इत्याशंक्य श्रुत्यर्थपर्यालोचनवशादिति दर्शयितुं श्रुतिमर्थतः पठति । सत्यमिति ॥ ९१ ॥

आपातदृष्टितस्तत्र ब्रह्मणो भाति हेतुता ॥
हेतोश्च सत्यता तस्मादन्योन्याध्यास इष्यते ॥ ९२ ॥

भवत्वेषा श्रुतिरनया कथमन्योन्याध्यासावगतिरित्यत आह।आपातेति । तत्र तस्यां श्रुतौ सत्यादिलक्षणस्य निर्गुणब्रह्मणो जगत्कारणत्वं जगत्कारणस्य मायाधीनचिदाभासस्य च सत्यत्वमापाततः प्रतीयमानमन्योन्याध्यासमंतरेण न घटते इति भावः॥९२॥

अन्योन्याध्यासरूपोऽसावन्नलिप्तपटो यथा ॥
घट्टितेनैकतामेति तद्वद्भ्रांत्यैकतां गतः ॥ ९३ ॥

एवमन्योन्याध्याससिद्धमीश्वरब्रह्मणोरेकत्वं पूर्वत्रोदाहृतं घट्टितपटदृष्टांतस्मारणेन द्रढयति । अन्योन्येति ॥ ९३ ॥

मेघाकाशमहाकाशौ विविच्येते न पामरैः ॥
तद्वद्ब्रह्मेशयोरैक्यं पश्यंत्यापातदर्शिनः ॥ ९४ ॥

भ्रांत्यैकत्वापत्तौ दृष्टांतमभिधायापातदर्शिनां भेदाप्रतीतौ पूर्वोक्तमेव दृष्टांतांतरं दर्शयति । मेघाकाशेति । तद्वत् ब्रह्मेशयोरैक्यंपश्यंति न भेदमित्यर्थः ॥ ९४ ॥

उपक्रमादिभिर्लिंगैस्तात्पर्यस्य विचारणात् ॥
असंगं ब्रह्म मायावी सृजत्येष महेश्वरः ॥ ९५ ॥

कुतस्तर्हि ब्रह्मेशयोर्भेदावगतिरित्यत आह । उपक्रमेति । 'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलं । अर्थवादोपपत्तीच लिंगं तात्पर्यानिर्णय, इत्युक्तैः षड्भिर्लिंगैः श्रुतितात्पर्यावधारणे सति ब्रह्मासंगं मायावी स्रष्टेत्यवगम्यत इति शेषः ॥ ९५ ॥

सत्यं ज्ञानमनंतं चेत्युपक्रम्योपसंहृतम् ॥
यतो वाचो निवर्तंत इत्यसंगत्वनिर्णयः ॥ ९६ ॥

श्रुतावुपक्रमोपसंहारैकरूपप्रदर्शनेनोक्तं ब्रह्मणोऽसंगत्वं स्पष्टयाति । सत्यमिति । अतोऽसंगत्वनिर्णयो भवतीति शेषः ॥ ९६ ॥

मायी सृजति विश्वं सन्निरुद्धस्तत्र मायया ॥
अन्य इत्यपरा ब्रूते श्रुतिस्तेनेश्वरः सृजेत् ॥ ९७ ॥

मायाविन ईश्वरस्य स्रष्टृत्वप्रतिपादिकां श्रुतिमर्थतो दर्शयति । मायीति । 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्ध' इति श्रुतिरीश्वरस्य स्रष्टृत्वं जीवस्य तत्र जगति बद्धत्वं च दर्शयतीति भावः ॥ ९७ ॥

आनंदमय ईशोऽयं बहुस्यामित्यवैक्षत ॥
हिरण्यगर्भरूपोऽभूत्सुप्तिः स्वप्नो यथा भवेत् ॥ ९८ ॥

एवमानंदमयस्येश्वरस्य जगत्कारणत्वं प्रतिपाद्य तस्माज्जगदुत्पत्तिप्रकारमाह । आनंदमय इति । ईक्षित्वा च हिरण्यगर्भरूपोऽभूदित्यन्वयः । तत्र दृष्टांतमाह सुप्तिरिति ॥ ९८ ॥

क्रमेण युगपद्वैषा सृष्टिर्ज्ञेया यथाश्रुति ॥
द्विविधश्रुतिसद्भावात् द्विविधस्वप्नदर्शनात् ॥ ९९ ॥

'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इत्यादौ क्रमेण सृष्टिश्रवणादिदं सर्व-

मसृजतेति युगपच्छ्रवणाच्च कस्योपादेयत्वं कस्य वा हेयत्वमित्याकांक्षायां श्रुतियुक्त्युपेतत्वादुभयं ग्राह्यमित्याह । क्रमेणेति । एषा जगत्सृष्टिर्द्विविधश्रुतिसद्भावात् क्रमेण युगपद्वा यथाश्रुति ज्ञेयेति योजना।तत्रोपपत्तिर्द्विविधस्वप्नदर्शनादिति लोके क्रमयुक्तस्य चाक्रमयुक्तस्य च स्वप्नपदार्थजातस्य दर्शनादिति भावः ॥ ९९ ॥

सूत्रात्मा सूक्ष्मदेहाख्यः सर्वजीवघनात्मकः ॥
सर्वाहंमानधारित्वात् क्रियाज्ञानादिशक्तिमान् ॥ २०० ॥

हिरण्यगर्भस्य स्वरूपं निरूपयति । सूत्रात्मेति । सूत्रात्मा पटे सूत्रमिव जगत्यनुस्यूत आत्मा स्वरूपं यस्य स सूक्ष्मदेह इत्याख्या यस्य स तथाविधः सर्वजीवघनात्मकः सर्वेषां जीवानां लिंगशरीरोपाधिकानां घनात्मकः समष्टिस्वरूपः । तत्र हेतुः । सर्वाहंमानेति । सर्वेषु व्यष्टिलिंगशरीरेषु अहंमानवत्त्वादिति भावः इच्छाज्ञानक्रियाशक्तिमांश्च ॥ २०० ॥

प्रत्यूषे वा प्रदोषे वा मग्नो मंदे तमस्ययम् ॥
लोको भाति यथा तद्वदस्पष्टं जगदीक्ष्यते ॥ १ ॥

हिरण्यगर्भावस्थायां जगत्प्रतीतौ दृष्टांतमाह । प्रत्यूष इति । प्रत्यूषः उषःकालः ॥ १ ॥

सर्वतो लांछितो मष्या यथास्याद्धट्टितः पटः ॥
सूक्ष्माकारैस्तथेशस्य वपुः सर्वत्र लांछितम् ॥ २ ॥

एवं लोकप्रसिद्धदृष्टांतमभिधाय यथा धौत इति पूर्वोक्तश्लोकेऽभिहितं लांछितं पटं दृष्टांतयति । सर्वतइति । यथा घट्टितः पटो मषीमयैराकारविशेषैर्लांछितो भवति तथा मायिन ईश्वरस्य वपुः अपंचीकृतभूतकार्यैर्लिंगशरीरैर्लांछितमित्यर्थः ॥ २ ॥

सस्यं वा शाकजातं वा सर्वतोऽङ्कुरितं यथा ॥
कोमलं तद्वदेवैष पेलवो जगदंकुरः ॥ ३ ॥

बुद्ध्यारोहाय वैभवात् दृष्टांतांतरमाह । सस्यंवेति ॥ ३ ॥

आतपाभातलोको वा पटो वा वर्णपूरितः ॥
सस्यं वा फलितं यद्वत्तथा स्पष्टवपुर्विराट् ॥ ४ ॥

एवं सूत्रात्मस्वरूपं विशदीकृत्य तस्यैवावस्थाभेदं पंचीकृतभूतकार्योपाधिकं विराजं

दृष्टांतत्रयेण विशदयति । आतपेति । सूर्योदयानंतरमातपेन प्रकाशितो लोकः आतपाभातलोकः ॥ ४ ॥

विश्वरूपाध्याय एष उक्तः सूक्तेऽपि पौरुषे ॥
धात्रादिस्तंबपर्यंतानेतस्यावयवान्विदुः ॥ ५ ॥

तत्सद्भावे प्रमाणमाह । विश्वरूपेति । विश्वरूपाध्यायादौ कीदृकरूपमुदितमित्याकांक्षायां ब्रह्मादिस्तंबपर्यंतजगद्रूपमुदितमित्याह । धात्रादीति ॥ ५ ॥

ईशसूत्रविराड्वेधोविष्णुरुद्रेंद्रवह्नयः ॥
विघ्नभैरवमैरालमरिका यक्षराक्षसाः ॥ ६ ॥
विप्रक्षत्रियविट्शूद्रा गवाश्वमृगपक्षिणः ॥
अश्वत्थवटचूताद्या यवव्रीहितृणादयः ॥ ७ ॥
जलपाषाणमृत्काष्ठवास्याकुद्दालकादयः ॥
ईश्वराः सर्व एवैते पूजिताः फलदायिनः ॥ ८ ॥

एतावता प्रकृते किमायातमित्याशंक्यांतर्यामिप्रभृतिकुद्दालकादिपर्यंतं वस्तुजातं प्रत्येकमीश्वरत्वेन पूज्यतामित्याह । ईशेत्यादिना श्लोकत्रयेण ॥ ६ ॥ ७ ॥ ८ ॥

यथायथोपासते तं फलमीयुस्तथातथा ॥
फलोत्कर्षापकर्षौ तु पूज्यपूजानुसारतः ॥ ९ ॥

'ते यथायथोपासते तदेव भवती'ति श्रुतिः तत्तत्पूजातस्तत्फलसद्भावे प्रमाणमित्याह । यथायथेति । ननु सर्वेषामीश्वरत्वे फलवैषम्यं कुत इत्याशंक्य पूज्यानामधिष्ठानानां पूजनानामर्चादीनां च सात्विकादिभेदेन वैषम्यमित्याह । फलोत्कर्षेति ॥ ९ ॥

मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न चान्यथा ॥
स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा ॥ १० ॥

सांसारिकफलसिद्धिरेवं भवतु मुक्तिः कस्योपासनाद्भवतीत्याशंक्य ज्ञानव्यतिरेकणे केनापि न भवतीत्याह । मुक्तिरिति । तत्र दृष्टांतमाह । स्वप्रबोधमिति । स्वजागरणमंतरेण स्वनिद्राकल्पितस्वप्नो यथा न निवर्तते तथा ब्रह्मतत्त्वज्ञानमंतरेण तदज्ञानकल्पितः स्वसंसारो न निवर्तते इति भावः ॥ १० ॥

अद्वितीयब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत् ॥
ईशजीवादिरूपेण चेतनाचेतनात्मकम् ॥ ११ ॥

ननु द्वैतनिवृत्तिलक्षणाया मुक्तेः स्वप्नदृष्टांतेन तत्त्वबोधसाध्यत्वाभिधानमनुपपन्नं निवर्त्यस्य द्वैतस्य स्वप्नतुल्यत्वाभावादित्याशंक्यान्यथाग्रहणरूपत्वेन स्वप्नतुल्यत्वमस्त्येव 'त्रयमेतत्सुषुप्तं स्वप्नं मायामात्र'मिति श्रुत्याऽभिहितत्वान्मैवमित्याह । अद्वितीयेति । ईशजीवादिरूपेण वर्तमानं चेतनाचेतनात्मकं यदखिलं जगदस्त्ययमद्वितीयब्रह्मतत्त्वे स्वप्न इति योजना ॥ ११ ॥

आनंदमयविज्ञानमयावीश्वरजीवकौ ॥
मायया कल्पितावेतौ ताभ्यां सर्वं प्रकल्पितम् ॥ १२ ॥

नन्वीशजीवयोर्ब्रह्माभिन्नयोः कथं जगदंतःपातित्वमित्याशंक्य तयोर्मायाकल्पितत्वेन जगदंतःपातित्वमित्याह । आनंदमयेति ॥ १२ ॥

ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता ॥
जाग्रदादिविमोक्षांतः संसारो जीवकल्पितः ॥ १३ ॥

ताभ्यां सर्वं कल्पितमित्युक्तं तत्र केन कियत्कल्पितमित्याकांक्षायामाह । ईक्षणादिति । 'स ऐक्षत लोकान्नु सृजा' इत्यादिकया 'एतया द्वारा प्रापद्यते'त्यंतया श्रुत्या प्रतिपादिता सृष्टिरीश्वरकर्तृका 'तस्य त्रय आवसथा' इत्यादिकया 'स एतमेव पुरुषं ब्रह्मततमपश्य'दित्यंतया श्रुत्या प्रतिपादितः संसारो जीवकर्तृक इत्यर्थः ॥ १३ ॥

अद्वितीयं ब्रह्मतत्त्वमसंगं तन्न जानते ॥
जीवेशयोर्मायिकयोर्वृथैव कलहं ययुः ॥ १४ ॥

ननु ब्रह्मण एव पारमार्थिकत्वे वादिनां जीवेश्वरतत्त्वविषया विप्रतिपत्तिः कुत इत्याशंक्य श्रुतिसिद्धतत्त्वज्ञानशून्यत्वादित्याह । अद्वितीयमिति ॥ १४ ॥

ज्ञात्वा सदा तत्त्वनिष्ठा ननु मोदामहे वयम् ॥
अनुशोचाम एवान्यान्न भ्रांतैर्विवदामहे ॥ १५ ॥

जीवेश्वरविषयाया वादिविप्रतिपत्तेः अज्ञानमूलत्वे तथाविधतत्त्वेन बोधनीया इत्याशंक्य वृथाश्रमत्वान्नेत्याह । ज्ञात्वेति ॥ १५ ॥

तृणार्चकादियोगांता ईश्वरे भ्रांतिमाश्रिताः ॥
लोकायतादिसांख्यांता जीवे विभ्रान्तिमाश्रिताः ॥ १६ ॥

ईश्वरे जीवे च भ्रांत्या विप्रतिपन्नात् वादिनो विभज्य दर्शयति । तृणेति ॥ १६ ॥

अद्वितीयब्रह्मतत्त्वं न जानंति यदा तदा ॥
भ्रांता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥ १७ ॥

कुतो भ्रांतत्वं तेषामित्यत आह । अद्वितीयेति । ततः किं तत्राह । तेषामिति । परिगृहीतपक्षप्रतिपादनाभिनिवेशेन चित्तविश्रांत्यभावात् नैहिकमपि सुखं तेषामित्याह । क्वेह वेति ॥ १७ ॥

उत्तमाधमभावश्चेत्तेषां स्यादस्तु तेन किम् ॥
स्वप्नस्थराज्यभिक्षाभ्यां न बुद्धः स्पृश्यते खलु ॥ १८ ॥

ननु तेषां ब्रह्मविद्याभावेऽपि इतरविद्याप्रयुक्त उत्तमाधमभावो दृश्यते उत्तमत्वप्रयुक्तं सुखं केषांचित्स्यादित्याशंक्य तस्य मुमुक्षुभिरनादरणीयत्वं दृष्टांतेनाह । उत्तमाधमेति ॥ १८ ॥

तस्मान्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः ॥
कार्या किंतु ब्रह्मतत्त्वं विचार्य बुध्यतां च तत् ॥ १९ ॥

जीवेश्वरवादयोर्मुक्तिहेतुत्वाभावान्न मुमुक्षुभिस्तत्र मतिः निवेशनीयेत्युपसंहरति । तस्मादिति । तर्हि किं कर्तव्यमित्याशंक्य श्रुतिविचारेण ब्रह्मबोध एव कर्तव्य इत्याह। किंत्विति ॥ १९ ॥ ॥

पूर्वपक्षतया तौ चेत्तत्त्वनिश्चयहेतुताम् ॥
प्राप्नुतोऽस्तु निमज्जस्व तयोर्नैतावताऽवशः ॥ २० ॥

ननु ब्रह्मतत्त्वनिश्चयाय तयोः स्वरूपं हेयत्वेन ज्ञातव्यमित्याशंक्य तथात्वे जीवेशवादयोरेव बुद्धिर्न परिसमापनीयेत्याह । पूर्वपक्षतयेति । एतावता पूर्वपक्षतया तत्त्वनिर्णयहेतुत्वसंभवेन तयोर्जीवेशवादयोरेवावशो विवेकज्ञानशून्यो न निमज्जस्वेति योजना ॥ २० ॥

असंगचिद्विभुर्जीवः सांख्योक्तस्तादृगीश्वरः ॥
योगोक्तस्तत्त्वमोरर्थौ शुद्धौ ताविति चेच्छृणु ॥ २१ ॥

ननु सांख्ययोगशास्त्रोक्तयोर्जीवेशयोः शुद्धचिद्रूपत्वेन भवद्भिरप्युपादेयत्वान्न तयोः पूर्वपक्षत्वमिति शंकते । असंगचिदिति । सांख्ययोगशास्त्रोक्तयोर्जीवेशयोः शुद्धचिद्रूपत्वेऽपि तयोर्वास्तवभेदस्य तैरंगीकारान्नायमस्मत्सिद्धांत इत्याह । शृण्विति ॥ २१ ॥

न तत्त्वमोरुभावर्थावस्मत्सिद्धांततां गतौ ॥
अद्वैतबोधनायैव सा कक्षा काचिदिष्यते ॥ २२ ॥

न तत्त्वमोरिति । तत्त्वंपदयोरुभावर्थावस्मत्सिद्धांतत्वं न गताविति योजना । ननु कुटस्थब्रह्मशब्दाभ्यां शुद्धौ तत्त्वंपदार्थौ भवद्भिरपि भिन्नौ निरूपितावित्याशंक्याह । अद्वैतबोधनायैवेति । लोकप्रसिद्धभेदनिरासद्वारा तदैक्यप्रतिपादनायैव तौ भेदेनानूदितौ न तु तयोर्भेदः प्रतिपाद्यते इति भावः ॥ २२ ॥

अनादिमायया भ्रांता जीवेशौ सुविलक्षणौ ॥
मन्यंते तद्व्युदासाय केवलं शोधनं तयोः ॥ २३ ॥

तर्हि पदार्थशोधनं किमर्थमित्यत आह । अनादीति । अत्र मायाशब्देन स्वाश्रयव्यामोहिका अविद्या लक्ष्यते तया विपरीतज्ञानं प्राप्ताः कर्तृत्वादिमत्त्वं जीवस्य सर्वज्ञत्वादिगुणयोगित्वं चेश्वरस्य पारमार्थिकं मन्यंतेऽतस्तन्निवृत्त्यर्थमेव शोधनं क्रियते इत्यर्थः ॥ २३ ॥

अत एवात्र दृष्टांतो योग्यः प्राक् सम्यगीरितः ॥
घटाकाशमहाकाशजलाकाशाभ्रखात्मकः ॥ २४ ॥

पदार्थशोधनप्रकारमेव दिदर्शयिषुस्तदुपायत्वेन पूर्वोक्तदृष्टांतं स्मारयति । अतएवेति । यतः पदार्थशोधनं कर्तव्यमत एवेत्यर्थः ॥ २४ ॥

जलाभ्रोपाध्यधीने ते जलाकाशाभ्रखे तयोः ॥
आधारौ तु घटाकाशमहाकाशौ सुनिर्मलौ ॥ २५ ॥

पदार्थशोधनप्रकारमाह । जलाभ्रेति । ये जलाकाशाभ्रखे ते जलाभ्रोपाध्यधीनत्वादपारमार्थिके तयोराधारभूतौ घटाकाशमहाकाशौ सुनिर्मलौ जलाद्युपाधिनिरपेक्षाकाशमात्ररूपावित्यर्थः ॥ २५ ॥

एवमानंदविज्ञानमयौ मायाधियोर्वशौ ॥
तदधिष्ठानकूटस्थब्रह्मणी तु सुनिर्मले ॥ २६ ॥

दार्ष्टांतिकमाह । एवमिति ॥ २६ ॥

एतत्कक्षोपयोगेन सांख्ययोगौ मतौ यदि ॥
देहोऽन्नमयकक्षत्वादात्मत्वेनाभ्युपेयताम् ॥ २७ ॥

ननु पदार्थद्वयशोधनकक्षोपयोगित्वेनापि सांख्ययोगमतद्वयमंगीकार्यमिति चेद-ल्पमिदमुच्यते इतरेषामपि शास्त्राणां तत्कक्षोपयोगित्वेनास्माभिरभ्युपेयत्वादित्याह। एतदिति ॥ २७ ॥

आत्मभेदो जगत्सत्यमीशोऽन्य इति चेत्त्रयम् ॥
त्यज्यते तैस्तदा सांख्ययोगवेदांतसंमतिः ॥ २८ ॥

कुतस्तर्हि सांख्ययोगयोर्वेदांतविरोधित्वमित्याशंक्य जीवभेदजगत्सत्यत्वेश्वरताट-स्थ्यलक्षणेंऽशे इत्याह। आत्मभेद इति ॥ २८ ॥

जीवोऽसंगत्वमात्रेण कृतार्थ इति चेत्तदा ॥
स्रक्चंदनादिनित्यत्वमात्रेणापि कृतार्थता ॥ २९ ॥

ननु जीवस्यासंगत्वज्ञानादेव मुक्तिसिद्धेः किमद्वैतबोधेनेत्याशंक्याद्वैतज्ञानमंतरेणा-संगत्वादिकं न संभाव्यते इत्यभिसंधिं हृदि निधायोत्तरमाह। जीव इति ॥ २९ ॥

यथा स्रगादिनित्यत्वं दुःसंपाद्यं तथाऽऽत्मनः ॥
असंगत्वं न संभाव्यं जीवतोर्जगदीशयोः ॥ ३० ॥

अभिसंधिमाविष्करोति। यथेति। जीवतोर्विशेष्यविशेषणाकारेण भासमानयोः ॥ ३० ॥

अवश्यं प्रकृतिः संगं पुरेवापादयेत्तथा ॥
नियच्छत्येतमीशोऽपि कोऽस्य मोक्षस्तथा सति ॥ ३१ ॥

असंभवमेव स्पष्टयति। अवश्यमिति। फलितमाह। कोऽस्येति ॥ ३१ ॥

अविवेककृतः संगो नियमश्चेति चेत्तदा ॥
बलादापतितो मायावादः सांख्यस्य दुर्मतेः ॥ ३२ ॥

संगनियमनयोरविवेककार्यत्वात् विवेकज्ञानेन च अविवेकनिवृत्तौ कुतः पुनः संगाद्यु-त्पत्तिरिति शंकते। अविवेकेति। एवं सत्यपसिद्धांतापात इति परिहरति। बलादिति। अयं अभावमात्रस्य भावकार्यजनकत्वायोगात् न द्वितीयः विवेकादन्यस्य घटादेः संगहेतुत्वादर्शनात् तृतीये तु तस्य भावरूपाज्ञानत्वमेवेति मायावादप्रसंग इति ॥ ३२ ॥

बंधमोक्षव्यवस्थार्थमात्मनानात्वमिष्यताम् ॥
इति चेन्न यतो माया व्यवस्थापयितुं क्षमा ॥ ३३ ॥

अद्वैताभ्युपगमे बंधमोक्षव्यवस्थानुपपत्तेरात्मभेदोंऽगीकर्तव्य इति चोदयति। बंध-

अयं भावः किमविवेकप्राबल्येन विवेकाभाव उच्यते उत विवे
कारस्मात् उताग्रहज्ञानं नाद्यः

मोक्षेति । एकस्याप्यात्मनो मायया बंधमोक्षव्यवस्थोपपत्तेर्मैवमिति परिहरति । नयत इति ॥ ३२ ॥

दुर्घटं घटयामीति विरुद्धं किं न पश्यसि ॥
वास्तवौ बंधमोक्षौ तु श्रुतिर्न सहतेतराम् ॥ ३४ ॥

मायाऽपि कथं व्यवस्थापयेदित्याशंक्य तस्या दुर्घटकारित्वस्वाभाव्यादित्याह । दुर्घटमिति । बंधस्याविद्यकत्वेऽपि मोक्षो वास्तवोऽभ्युपेतव्य इत्याशंक्य श्रुतिविरोधान्मैवमित्याह । वास्तवाविति । न सहतेतरामतितरां नैव सहते इत्यर्थः । बंधमिव मोक्षमपि वास्तवं न सहते इति भावः ॥ ३४ ॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३५ ॥

मोक्षादेर्वास्तवत्वप्रतिषेधिकां श्रुतिं पठति। न निरोध इति । निरोधः नाश उत्पत्तिर्देहसंबंधः बद्धः सुखदुःखादिधर्मवान् साधकः श्रवणाद्यनुष्ठाता मुमुक्षुः साधनचतुष्टयसंपन्नः मुक्तः निवृत्ताविद्यः इत्येतत्सर्वं वस्तुनो नास्तीत्यर्थः ॥ ३५ ॥

मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ ॥
यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि ॥ ३६ ॥

एवं जीवेश्वरादिभेदस्य मायामयत्वमुपपादितमुपसंहरति । मायाख्याया इति ३६॥

कूटस्थब्रह्मणोर्भेदो नाममात्रादृते न हि ॥
घटाकाशमहाकाशौ वियुज्येते न हि क्वचित् ॥ ३७ ॥

ननु जीवेश्वरयोर्मायिकत्वेन तद्भेदस्य मिथ्यात्वेऽपि कूटस्थब्रह्मणोः पारमार्थिकत्वेन तद्भेदोपि परमार्थिकः स्यात् इत्याशंक्य भेदप्रयोजकस्य स्वरूपवैलक्षण्यस्याभावान्मैवमिति परिहरति । कूटस्थेति । नाममात्राद्भेदप्रतीतावपि वस्तुतो भेदाभावे दृष्टांतं पूर्वोक्तं स्मारयति । घटकाशेति ॥ ३७ ॥

यदद्वैतं श्रुतं सृष्टेः प्राक्तदेवाद्य चोपरि ॥
मुक्तावपि वृथा माया भ्रामयत्यखिलाञ्जनान्॥ ३८ ॥

एवं भेदस्य मिथ्यात्वसमर्थनेन किं फलमित्याह । यदद्वैतमिति । ‘ सदेव सोम्येदमग्रआसीत् एकमेवाद्वितीयमि ’ ति श्रुतौ यदद्वितीयं ब्रह्म प्रतिपादितं तदेव काल-

त्रयेऽप्यबाध्यत्वेन वास्तवं न भेद इति भावः । कुतस्तर्हि सर्वैर्भेदाभिनिवेशः क्रियते इत्यत आह । वृथामायेति । तत्वज्ञानरहितत्वादभिनिवेशं कुर्वंतीति भावः ॥ ३८ ॥

ये वदंतीत्थमेतेऽपि भ्राम्यंतेऽविद्ययाऽत्र किम् ॥
न यथा पूर्वमेतेषामत्र भ्रांतेरदर्शनात् ॥ ३९ ॥

ननु प्रपंचस्य मायामयत्वं तत्त्वस्याद्वितीयत्वं च ये वर्णयंति तेपि संसारवंतो दृश्यंते अतस्तत्त्वज्ञानेन किं प्रयोजनमिति शंकते । ये वदंतीति । कर्मवशात्केषांचिद्व्यवहारे सत्यपि पूर्ववदभिनिवेशाभावान्मैवमिति परिहराति । न यथेति ॥ ३९ ॥

ऐहिकामुष्मिकः सर्वः संसारो वास्तवस्ततः ॥
न भाति नास्ति चाद्वैतमित्यज्ञानिविनिश्चयः ॥ ४० ॥

ज्ञानिनां भ्रांत्यभावं दर्शयितुं अज्ञानिनां निश्चयं तावदाह । ऐहिकेति । इह लोके भव ऐहिकः पुत्रकलत्रादिपोषणरूपः अमुष्मिन्परलोके भव आमुष्मिकः स्वर्गसुखाद्यनुभवरूपः ॥ ४० ॥

ज्ञानिनो विपरीतोऽस्मान्निश्चयः सम्यगीक्ष्यते ॥
स्वस्वनिश्चयतो बद्धोमुक्तोऽहं चेति मन्यते ॥ ४१ ॥

तत्त्वविनिश्चयस्य ततो वैलक्षण्यं दर्शयाति । ज्ञानिनामिति । अद्वैतं पारमार्थिकं भाति च संसारस्त्वपारमार्थिक इति निश्चय इत्यर्थः । ततः किमित्याशंक्य स्वस्वानिश्चयानुसारेण फलं भवतीत्याह । स्वस्वेति ॥ ४१ ॥

नाद्वैतमपरोक्षं चेन्न चिद्रूपेण भासनात् ॥
अशेषेण न भातं चेद्वैतं किं भासतेऽखिलम् ॥ ४२ ॥

अद्वैतं भातीत्युक्तिः शास्त्रत एव नानुभवतोऽतो न तन्निश्चय इति शंकते । नाद्वैतमिति । अनुभवागोचरत्वमसिद्धमिति परिहराति । न चिद्रूपेणेति । घटः स्फुरति पटः स्फुरति इति घटादिष्वनुस्यूतस्फुरणरूपेण भानादित्यर्थः । ननु चिद्रूपत्वस्य भानेऽपि तत्कात्स्र्न्येन न प्रतीयते इति शंकते। अशेषेणेति । साकल्येन भानाभावो द्वैतेऽपि समान इत्याह । द्वैतं किमिति ॥ ४२ ॥

दिङ्मात्रेण विभानं तु द्वयोरपि समं खलु ॥
द्वैतसिद्धिवदद्वैतसिद्धिस्ते तावता न किम् ॥ ४३ ॥

एवं दोषसाम्यमभिधाय परिहारसाम्यमाह । दिङ्मात्रेणेति । दिङ्मात्रेणैकदेशेन

द्वयोर्द्वैताद्वैतयोरित्यर्थः । एतावता कथं परिहारसाम्यमित्याशंक्याह । द्वैतसिद्धिवदिति । ते तव पक्षे तावता एकदेशप्रतीतिसद्भावेन द्वैतसिद्धिवत् द्वैतनिश्चय इवाद्वैतसिद्धिरद्वैतनिश्चयोऽपि किं न भवति किंतु भवत्येवेत्यर्थः ॥ ४३ ॥

द्वैतेन हीनमद्वैतं द्वैतज्ञाने कथं त्विदम् ॥
चिद्भानं त्वविरोध्यस्य द्वैतस्यातोऽसमे उभे ॥ ४४ ॥

पूर्ववादी प्रकारांतरेणाद्वैतासिद्धिं शंकते । द्वैतेनेति । अद्वैतं द्वैतरहितं तयोः परस्परविरोधात्तथा सति द्वैतप्रतीतावद्वैतं न संभवतीत्यर्थः । ननु तर्हि द्वैतस्याप्यद्वैतविरोधित्वादद्वैते प्रतिभासमाने द्वैतस्यासिद्धिरिति चोद्यं समानमित्याशंक्याह पूर्ववादी । चिद्भानंत्विति । भवन्मते चिद्रूपप्रतीतेरेवाद्वैतप्रतीतित्वात्तस्याश्च द्वैतविरोधित्वाभावान्नोभयोः साम्यमिति भावः ॥ ४४ ॥

एवं तर्हि शृणु द्वैतमसन्मायामयत्वतः ॥
तेन वास्तवमद्वैतं परिशेषाद्विभासते ॥ ४५ ॥

प्रतीयमानस्यापि द्वैतस्य वास्तवत्वाभावान्न वास्तवाद्वैतविघातित्वमिति परिहरति सिद्धांती । एवमिति । प्रसक्तप्रतिषेधेऽन्यत्राप्रसंगाच्छिष्यमाणे संप्रत्ययः परिशेषः ॥ ४५ ॥

अचिंत्यरचनारूपं मायैव सकलं जगत् ॥
इति निश्चित्य वस्तुत्वमद्वैते परिशेष्यताम् ॥ ४६ ॥

परिशेषप्रकारमेव दर्शयति । अचिंत्येति । न चिंत्या अचिंत्या अचिंत्या रचना रूपं यस्य तत्तथाविधं सकलं जगत् मायैव मिथ्यैवेत्यनेन प्रकारेणानिर्वचनीयत्वान्मिथ्यात्वं द्वैतस्य निश्चित्य वास्तवमद्वैतं परिशेष्यतामित्यर्थः ॥ ४६ ॥

पुनर्द्वैतस्य वस्तुत्वं भाति चेत्त्वं तथा पुनः ॥
परिशीलय को वाऽत्र प्रयासस्तेन ते वद ॥ ४७ ॥

नन्वेवमद्वैतनिश्चये कृतेऽपि पुनःपुनर्द्वैतसत्यत्वं पूर्ववासनया भातीत्याशंक्य तन्निवृत्तये पुनःपुनर्मिथ्यात्वं विचारयेदित्याह । पुनर्द्वैतस्येति । 'आवृत्तिरसकृदुपदेशा' दिति चतुर्थाध्याये आत्मनः श्रवणाद्यावर्तनस्य विहितत्वाद्व्यासेनेति भावः ॥ ४७ ॥

कियंतं कालमिति चेत् खेदोऽयं द्वैत इष्यताम् ॥
अद्वैते तु न युक्तोऽयं सर्वानर्थनिवारणात् ॥ ४८ ॥

कियंतं कालमित्थं विचारणीयमित्याशंक्य 'तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते'

इति विचारकालावधेरुक्तत्वान्नाद्वैतविचारेऽयं खेदो युक्तः किंतु द्वैतप्रतिभास एव युक्त इत्याह । कियंतमिति ॥ ४८ ॥

क्षुत्पिपासादयो दृष्टा यथापूर्वं मयीति चेत् ॥
मच्छब्दवाच्येऽहंकारे दृश्यतां नेति को वदेत् ॥ ४९ ॥

नन्वेवमद्वैतात्मतत्त्वापरोक्षज्ञानवत्यपि मयि क्षुत्पिपासानर्थस्य परिदृश्यमानत्वादनर्थनिवारकत्वमात्मज्ञानस्यासिद्धमिति शंकते । क्षुत्पिपासादयइति । किं मच्छब्दवाच्येऽहंकारे दृश्यंते । उत मच्छब्दोपलक्षिते चिदात्मनीति विकल्प्य आद्यमंगीकरोति । मच्छब्दवाच्यइति न द्वितीयः तस्यासंगत्वादविषयत्वाच्चेति बहिरेव द्रष्टव्यम् ॥ ४९ ॥

चिद्रूपेऽपि प्रसज्येरंस्तादात्म्याध्यासतो यदि ॥
माऽध्यासं कुरु किंतु त्वं विवेकं कुरु सर्वदा ॥ ५० ॥

वस्तुतस्तत्प्रतीत्यभावेऽपि भ्रांत्या तत्प्रसक्तिः स्यादिति शंकते । चिद्रूपेऽपीति । एवं तर्ह्यनर्थहेतोरध्यासस्य निवृत्तये सदा विवेकः क्रियतामित्याह । माध्यासमिति ॥ ५० ॥

झटित्यध्यास आयाति दृढवासनयेति चेत् ॥
आवर्तयेद्विवेकं च दृढं वासयितुं सदा ॥ ५१ ॥

अनादिवासनावशात् पुनरध्यासागमने तन्निवृत्तये विवेक एवावर्तनीयो नोपायांतरमित्याह । झटितीति ॥ ५१ ॥

विवेके द्वैतमिथ्यात्वं युक्त्यैवेति न भण्यताम् ॥
अचिंत्यरचनात्वस्यानुभूतिर्हि स्वसाक्षिकी ॥ ५२ ॥

ननु विचारेण द्वैतस्य मायामयत्वं युक्त्यैव सिध्यति नानुभवत इत्याशंक्याचिंत्यरचनात्वलक्षणमिथ्यात्वानुभवस्य स्वसाक्षिकत्वान्मैवमिति परिहरति । विवेक इति ॥ ५२ ॥

चिदप्यचिंत्यरचना यदि तर्ह्यस्तु नो वयम् ॥
चितिं सुचिंत्यरचनां ब्रूमो नित्यत्वकारणात् ॥ ५३ ॥

नन्वचिंत्यरचनात्वं मिथ्यात्वपदार्थलक्षणमुक्तं चिदात्मन्यतिव्याप्तमिति शंकते । चिदपीति । प्रागभावयुक्तत्वे सति अचिंत्यरचनात्वमिथ्यालक्षणमिति विवक्षुरचिंत्यरचनात्वमात्मनोऽङ्गीकरोति । तर्ह्यस्त्विति । एवमंगीकारेऽपसिद्धांत इत्याशंक्य परिहरति । नोवयमिति । तत्र हेतुमाह । नित्यत्वेति । वयं चितिं सुचिंत्य रचनां नो ब्रूम इति योजना ॥ ५३ ॥

प्रागभावो नानुभूतश्चितेर्नित्या ततश्चितिः ॥
द्वैतस्य प्रागभावस्तु चैतन्येनानुभूयते ॥ ५४ ॥

चितेर्नित्यत्वं कुत इत्याशंक्य प्रागभावानुभवाभावादित्याह । प्रागभावइति । यतश्चितेः प्रागभावो नानुभूतस्ततो नित्येति योजना । इदमत्राकूतं चितेः प्रागभावोऽस्तीति वदन् प्रष्टव्यः चित्प्रागभावः किं चिताऽनुभूयते उतान्येन नान्येन तदन्यस्य जडत्वेन अनुभवितृत्वानुपपत्तेः चिताऽनुभूयते इत्यपि पक्षे किं चिदंतरेण उत स्वेनैव नाद्यः अद्वैतवादे चिदंतरस्यैव अभावात् तत्स्वीकारेऽपि चित्प्रतियोगिकस्य अभावस्य चिद्ग्रहणमंतरेण गृहीतुमशक्यत्वात् तस्या अपि गृह्यमाणत्वे घटादिवदचित्त्वापत्तेः नापि द्वितीयः स्वाभावस्य स्वेन गृहीतुमशक्यत्वादिति । ननु द्वैतस्य प्रमात्रादिभेदरूपत्वात् तदभावस्य च तेनैवानुभवितुमशक्यत्वात् तदनुभवित्रंतराभावाच्च चैतन्यवदेव द्वैतस्यापि नित्यत्वापत्तिरित्याशंक्य अनुभवित्रंतराभावोऽसिद्ध इति परिहरति । द्वैतस्येति । जाग्रदादिद्वैताभावस्य सुषुप्तौ साक्षिणाऽनुभूयमानत्वात् 'तमसः साक्षी सर्वस्य साक्षी' ति श्रुतेश्चेति भावः ॥ ५४ ॥

प्रागभावयुतं द्वैतं रच्यते हि घटादिवत् ॥
तथापि रचनाऽचिंत्या मिथ्या तेनेंद्रजालवत् ॥ ५५ ॥

एवं च प्रागभावयुतत्वे सति अचिंत्यरचनात्वस्य मिथ्यात्वलक्षणस्य सद्भावात् द्वैतमिथ्यात्वं सिद्धमित्याह । प्रागभावेति । प्रागभावयुतमिति हेतुगर्भितं विशेषणं द्वैतं प्रागभावयुतत्वात् घटादिवद्रच्यते हि तथाऽपि रच्यमानत्वेऽपि तस्य द्वैतस्य रचनाऽचिंत्या तेन रच्यमानत्वे सति अचिंत्यरचनात्वेन ऐंद्रजालिकप्रासादवन्मिथ्येत्यर्थः ५५॥

चित्प्रत्यक्षा ततोऽन्यस्य मिथ्यात्वं चानुभूयते ॥
नाद्वैतमपरोक्षं चेत्येतन्न व्याहतं कथम् ॥ ५६ ॥

चितिस्तावत्स्वप्रकाशत्वेन नित्याऽपरोक्षा च भासते चिद्व्यतिरिक्तस्य च मिथ्यात्वं तयैव चिताऽनुभूयते इति दर्शितं एवं च सत्यद्वैतस्यापरोक्षत्वं नास्तीति वदतो व्याघातश्च स्यादित्याह । चित्प्रत्यक्षेति । चिद्रूपेण भासनादित्यभिहितयुक्तिसमुच्चयार्थश्चशब्दः अद्वैतमपरोक्षं नेत्येतत्कथं न व्याहतं चेति योजना ॥ ५६ ॥

इत्थं ज्ञात्वाऽप्यसंतुष्टाः केचित्कुत इतीर्यताम् ॥
चार्वाकादेः प्रबुद्धस्याप्यात्मा देहः कुतो वद ॥ ५७ ॥

एवं वेदांतार्थं जानतामपि पुरुषाणां केषांचिदत्र विश्वासः कुतो न जायते इति

पृच्छति । इत्थमिति । सम्यग्विचारशून्यत्वादिति विवक्षुः प्रतिबंदीं गृह्णाति । चार्वाकादेरिति । आदिशब्देन पामरा गृह्यंते प्रबुद्धस्य ऊहापोहकुशलस्य ॥ ५७ ॥

सम्यग्विचारो नास्त्यस्य धीदोषादिति चेत्तथा ॥
असंतुष्टास्तु शास्त्रार्थे न त्वैक्षंत विशेषतः ॥ ५८ ॥

प्रतिबंदी मोचनं शंकते । सम्यगिति । साम्येन समाधत्ते । तथेति । धीदोषादित्यनुषज्यते । तुशब्दः एवशब्दार्थः ॥ ५८ ॥

यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः ॥
इति श्रौतं फलं दृष्टं नेति चेद्दृष्टमेव तत् ॥ ५९ ॥

इत्थं तत्त्वं विचार्य तज्जन्यतत्त्वज्ञानफलं विचारयितुं तत्प्रतिपादिकां श्रुतिं पठति । यदेति । 'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इत्यस्य मंत्रस्योत्तरार्धं अस्य मुमुक्षोर्हृदि श्रिता ये कामास्तादात्म्याध्यासमूला इच्छादयः संति ते सर्वे यदा यस्मिन्काले प्रमुच्यंते तत्त्वज्ञानेनाध्यासनिवृत्तौ निवर्तंते । अथ तदानीमेव मर्त्यः पूर्वदेहतादात्म्याध्यासेन मरणशीलः पुरुषः अमृत अध्यासाभावेन तद्रहितो भवति । तत्र हेतुमाह । अत्र ब्रह्म समश्नुते इति । अत्रास्मिन्नेव देहे ब्रह्मसत्यादिलक्षणं समश्नुते सम्यगाप्नोतीत्यस्याः श्रुतेरर्थः श्रुत्या प्रतिपादितं फलं कामनिवृत्त्यादिलक्षणं नानुभव सिद्धं किंतु शाब्दमेवेति शंकते । इतिश्रौतमिति । समनंतरश्रुतिवाक्यतात्पर्यालोचनया तस्य दृष्टत्वं सिध्यतीत्यभिप्रायेण परिहरति । दृष्टमेव तदिति ॥ ५९ ॥

यदा सर्वे प्रभिद्यंते हृदयग्रंथयस्त्विति ॥
कामा ग्रंथिस्वरूपेण व्याख्याता वाक्यशेषतः ॥ ६० ॥

तस्य दृष्टत्वस्पष्टीकरणाय तद्वाक्यमुदाहृत्य तस्यार्थमाह । यदा सर्वइति । अनेन वाक्यशेषेण कामप्रमोकस्य ग्रंथिभेदत्वेन व्याख्यातत्वात् ग्रंथिभेदस्य अहंकारचिदात्मनोस्तादात्म्याध्यासनिवृत्तिलक्षणस्य अनुभवसिद्धत्वान्नाप्रत्यक्षतेति भावः वाक्यशेषतः इत्यनेन वाक्येनेत्यर्थः ॥ ६० ॥

अहंकारचिदात्मानावेकीकृत्याविवेकतः ॥
इदं मे स्यादिदं मेस्यादितीच्छाः कामशब्दिताः ॥ ६१ ॥

ननु लोके कामशब्देनेच्छाभेद एवोच्यते अतः कथं तस्य ग्रंथित्वेन व्याख्यानमित्याशंक्य अध्यासमूलस्यैव इच्छाविशेषस्य कामशब्दवाच्यत्वं नेच्छामात्रस्येत्याह । अहंकारेति ॥ ६१ ॥

अप्रवेश्य चिदात्मानं पृथक् पश्यन्नहंकृतिम् ॥
इच्छंस्तु कोटिवस्तूनि न बाधो ग्रंथिभेदतः ॥ ६२ ॥

नन्वध्यासमूलस्यैव कामस्य त्याज्यत्वे सति इतरोऽभ्युपेतव्यः स्यादित्याशंक्य बाधकत्वाभावादभ्युपेयते एवेत्याह । अप्रवेश्येति । अहंकारे चिदात्मानमप्रवेश्य तादात्म्याध्यासेनानंतर्भाव्येत्यर्थः ॥ ६२ ॥

ग्रंथिभेदेऽपि संभाव्या इच्छाः प्रारब्धदोषतः ॥
बुद्ध्वाऽपि पापबाहुल्यादसंतोषो यथा तव ॥ ६३ ॥

नन्वध्यासाभावे कामानामनुदय एव स्यादित्याशंक्य आरब्धकर्मवशात्तेषामुत्पत्तिः संभविष्यतीत्याह । ग्रंथिभेदेऽपीति । अत्र दृष्टांतमाह । बुद्ध्वाऽपीति ॥ ६३ ॥

अहंकारगतेच्छाद्यैर्देहव्याध्यादिभिस्तथा ॥
वृक्षादिजन्मनाशैर्वा चिद्रूपात्मनि किं भवेत् ॥ ६४ ॥

अध्यासाभावेऽहंकारगतेच्छादेरबाधकत्वं दृष्टांतद्वयप्रदर्शनेन विशदयति । अहंकारेति । यथा देहगतव्याध्यादिभिः अहंकारसाक्षिणो बाधो नास्ति देहसंबंधरहितत्वात् यथा वृक्षादिगतैर्जन्मादिभिः एवमध्यासनिवृत्तावहंकारगतेच्छादिभिरपीति भावः ६४॥

ग्रंथिभेदात्पुराऽप्येवमिति चेत्तन्न विस्मर ॥
अयमेव ग्रंथिभेदस्तव तेन कृती भवान् ॥ ६५ ॥

चिदात्मनोऽसंगत्वस्यैकरूपत्वात् पूर्वमपि कामादिबाधो नास्तीति शंकते । ग्रंथिभेदादिति । एवंविधबोधस्यैव ग्रंथिभेदत्वेन अस्माभिरभिधीयमानत्वादिदं चोद्यमस्मदनुकूलमित्याह । तन्नविस्मरेति ॥ ६५ ॥

नैवं जानंति मूढाश्चेत्सोऽयं ग्रंथिर्न चापरः ॥
ग्रंथितद्भेदमात्रेण वैषम्यं मूढबुद्धयोः ॥ ६६ ॥

एवंविधज्ञानाभाव एव ग्रंथिरित्याह । नैवमिति । ननु ज्ञानिनोऽपीच्छाभ्युपगमे ज्ञान्यज्ञानिनोः कुतो वैलक्षण्यमित्याशंक्य ग्रंथिभेदाभेदातिरेकेण न कुतोऽपीत्याह । ग्रंथितद्भेदेति ॥ ६६ ॥

प्रवृत्तो वा निवृत्तो वा देहेंद्रियमनोधियाम् ॥
न किंचिदपि वैषम्यमस्त्यज्ञानिविबुद्धयोः ॥ ६७ ॥

कारणांतराभावमेव विशदयति । प्रवृत्ताविति ॥ ६७ ॥

व्रात्यश्रोत्रिययोर्वेदपाठापाठकृता भिदा ॥
नाहारादावस्ति भेदः सोऽयं न्यायोऽत्र योज्यताम् ॥ ६८ ॥

उक्तार्थे दृष्टांतमाह । व्रात्येति ॥ ६८ ॥

न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥
उदासीनवदासीन इति ग्रंथिभिदोच्यते ॥ ६९ ॥

ज्ञानिनो ग्रंथिशून्यत्वे गीतावाक्यं प्रमाणयति । नद्वेष्टीति । संप्रवृत्तानि प्राप्तानि दुःखानि न द्वेष्टि निवृत्तानि सुखानि न कांक्षति उदासीनवद्वर्तते इत्यर्थः । ग्रंथिभिदा ग्रंथिभेदः ॥ ६९ ॥

औदासीन्यं विधेयं चेद्वच्छब्दव्यर्थता तदा ॥
न शक्ता अस्य देहाद्या इति चेद्रोग एव सः ॥ ७० ॥

इदं वाक्यमौदासीन्यविधिपरं न तु ग्रंथिभेदे प्रमाणमिति शंकते । औदासीन्यमिति । विधिपरत्वे वच्छब्दो व्यर्थः स्यादिति परिहरति । वच्छब्देति । ज्ञानिदेहादेरकार्यक्षमत्वादप्रवृत्तिः न तु ग्रंथिभेदादित्याशंक्योपहसति । न शक्ताइति ॥ ७० ॥

तत्त्वबोधं क्षयं व्याधिं मन्यंते ये महाधियः ॥
तेषां प्रज्ञाऽतिविशदा किं तेषां दुःशकं वद ॥ ७१ ॥

भवतु को दोषस्तत्राह । तत्त्वबोधमिति । दुःशकमसाध्यमित्यर्थः ॥ ७१ ॥

भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा ॥
जक्षन् क्रीडन् रतिं विंदन्नित्यश्रौषीर्न किं श्रुतिम् ॥ ७२ ॥

नन्वस्थाने परिहासोऽयं ज्ञानिनां प्रवृत्त्यभावस्य पुराणसिद्धत्वादिति शंकते । भरतादेरिति । श्रुतिमजानानश्चोदयसीति परिहरति । जक्षन्निति । ‘ जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीर ’ मिति श्रौतं वाक्यं नाश्रौषीरित्यर्थः जक्षन् भक्षयन् जक्षभक्षसनयोरिति धातुः क्रीडन् स्वेच्छया विहरन् रममाणः स्त्र्यादिभिर्नोपजनं स्मरन्निदं शरीरमित्युपजनं जनानां समीपे वर्तमानमिदं स्वशरीरं न स्मरन्नानुसंदधान इत्यर्थः । श्लोके रतिं विदन्निति श्रौतस्य रममाण इतिपदस्य व्याख्यानम् ॥ ७२ ॥

न ह्याहारादि संत्यज्य भरताद्याः स्थिताः क्वचित् ॥
काष्ठपाषाणवत्किंतु संगभीता उदासते ॥ ७३ ॥

ननु तर्हि पुराणस्य का गतिरित्याशंक्य पुराणमप्यौदासीन्यबोधनपरं न प्रवृत्त्यभावपरमित्यभिप्रेत्याह । नह्याहारादीति ॥ ७३ ॥

संगी हि बाध्यते लोके निःसंगः सुखमश्नुते ॥
तेन संगः परित्याज्यः सर्वदा सुखमिच्छता ॥ ७४ ॥

संगोऽपि कुतस्त्यज्यते इत्यत आह । संगी हीति ॥ ७४ ॥

अज्ञात्वा शास्त्रहृदयं मूढो वक्त्यन्यथान्यथा ॥
मूर्खाणां निर्णयस्त्वास्तामस्मत्सिद्धांत उच्यते ॥ ७५ ॥

ननु तर्हि मानससंगस्यैव त्याज्यत्वेंऽतःसंगशून्यानां बहिर्व्यवहरतामज्ञत्वादिकं जनैः कथमुच्यते इत्याशंक्य शास्त्रतात्पर्यज्ञानशून्यत्वादित्याह । अज्ञात्वेति । अतो मूढव्यवहारो नात्र विचारणीय इत्याह । मूर्खाणामिति । तर्हि किमनुसंधेयमित्याकांक्षायां शास्त्रहृदयमित्याह । अस्मत्सिद्धांतइति ॥ ७५ ॥

वैराग्यबोधोपरमाः सहायास्ते परस्परम् ॥
प्रायेण सह वर्तंते वियुज्यंते क्वचित् क्वचित् ॥ ७६ ॥

कोऽसावित्यत आह । वैराग्येति ॥ ७६ ॥

हेतुस्वरूपकार्याणि भिन्नान्येषामसंकरः ॥
यथावदवगंतव्यः शास्त्रार्थं प्रविविच्यता ॥ ७७ ॥

वैराग्यादीनामन्योन्यपरिहारेण अवस्थानदर्शनादभेदशंकायास्तद्धेत्वादीनां भेदाद्भेदोऽवगंतव्य इत्याह । हेतुस्वरूपेति ॥ ७७ ॥

दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता ॥
असाधारणहेत्वाद्या वैराग्यस्य त्रयोऽप्यमी ॥ ७८ ॥

तत्र वैराग्यस्य हेत्वादित्रयं दर्शयति । दोषदृष्टिरिति ॥ ७८ ॥

श्रवणादित्रयं तद्वत्तत्त्वमिथ्याविवेचनम् ॥
पुनर्ग्रंथेरनुदयो बोधस्यैते त्रयो मताः ॥ ७९ ॥

इदानीं तत्त्वबोधस्य कारणादीनि दर्शयति । श्रवणादीति आदिशब्देन मनननिदिध्यासने गृह्येते 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य'इत्यात्मदर्शन-

